॥ नल्लूर् श्रीकालिका श्रुतिसुधा ॥

श्रीमत्सुन्दरपूर्विहाररसिकां कारुण्य-सिन्धुं शिवां
डक्का-शूल-कपाल-वह्नि-छुरिका-घण्टाऽर्धखेटोज्ज्वलाम् ।
किंचित्कुञ्चित-दक्षपाद-कमलां भूस्पृष्ट-वामाङ्घ्रिकां
आसीनां कुलदेवतां हृदि भजे श्रीकालिकामातरम् ॥ १॥

कावेरीकृत-सस्यवृद्धिमहिते ग्रामे द्विजैराधिते
कुन्ती-पुण्यद-सप्तसागरतटे संशोभमानां शुभाम् ।
कल्याणप्रद-सुन्दरेश-सदने संस्थापितां सौख्यदां
नारीकेल-वनावृतां हृदि भजे श्रीकालिकामम्बिकाम् ॥ २॥

सा त्वं दक्षिण-कर्णभूषणमहो कृत्वाऽसुरं भीषणं
शूलेनाऽसुरमन्यमुग्रमवनौ संच्छेद्य क्रुद्धाऽप्यलम् ।
श्रीमातः कुलदेवते तव शिशोर्मे सुप्रसन्नाऽभयं
दत्वा सर्वमभीप्सितं च दयया नित्यन्नु संरक्षसि ॥ ३॥

यद्यप्यत्र विभासि कोपकृतिभिर्नानायुधालङ्कृता
सेवन्ते कति गर्भिणीयुवतयः त्वामम्बिके निर्भयम् ।
डोलाभिश्च विचित्र-कङ्कण-गणैस्ते सन्निधिं भूषितं
कृत्वाऽऽराधनपूर्वकं शुभगुणान्नूनं लभन्ते सुतान् ॥ ४॥

एवं स्तोतुमनर्गलां सुकविताशक्तिं प्रदेह्यम्बिके
ज्ञानं सर्वसरस्वतीषु विमलं वाक्पाटवं चोत्तमम् ।
सद्बुद्धिं सुमनोऽपि देहि सुदृढं गात्रं च कीर्तिं श्रियं
सोढ्वा त्वत्पदभक्तिमेव नितरां सर्वापराधांश्च मे ॥ ५॥

॥ ॐ तत्सत्॥